श्रीरस्तु

श्री हयग्रीवायनमः

# जयंतिका प्रथमलहरी

आळ्वारैय्यंगार्येण प्रणीता.

वे. वि. सुब्बयच्च अंड् सन्स्, प्रिंटिंग् वर्क्स्,
बेंगळूर सिटि.
1930

श्रीः

श्रीरस्तु

श्रीमते हयग्रीवाय नमः

# जयंतिका प्रथमलहरी

(प) श्वेतं यस्य शरीरं निवसनवसनासनानि च सितानि ।
सोऽयं मनसि रमेशो निवसतु सततं तुरंगवदनो मे ॥ १ ॥

(ग) आसीद्विविधकुसुमभरितप्रताननीमंडितारामा अभ्रंकषकेतनालंकृतनिकेतना सुरनगर्यंतुकारिणी भासुरा अरिभीकरनाम्नी राजधानी॥ आसीच्च तस्यां साम्राज्यलक्ष्मीसमालिंगितविग्रहः सशरीरो मदन इव सौंदर्यैकवसतिः अधरीकृतनिखिलनृपालः धर्मायत्तचित्तः जीवसेनो नाम नरपतिः ॥

यस्य च तरुणस्यापि विवाहे विमुखतया चुंबनं वेणुवादने, न मदनोत्सवे प्रकंपः पापकर्मणि, न रमणीसमाकर्षणे[1], कंठग्रहो मित्रमंडलेषु न वनितासु पयोधरकुंभस्पर्शनं मंगलकार्येषु, न मृगाक्षीवक्षस्स्थलेषु, कंचुकनिर्मोचनं समीकेषु न योषाजनेषु, प्रह्वत्वं गुरुजनेषु न प्रणयकलहकुपितकामिनीजनेषु, समुद्गतरोमजालाकुलितशरीरता शिशिरसलिलावगहनेन न नववधूसमालिंगनेन, धवलिमा यशसा न मनोभवव्याधिना अभवत् ॥

1. न अरिजनसमाकर्षणे

स नरपतिः विमुक्तकरनिकरे दिवाकरे रक्तीकृतपश्चिमदिग्भागे भगवति निमज्जति कल्लोलकुलसलिलनिधौ अचिरसमुद्गतस्य नक्षत्रमाला-लंकृतस्य नक्तमपत्यस्य तमसः क्षुन्निवारणाय निर्मुक्तैकभागवलाहककंचुके संलि-प्रारागरक्तपटीरे कलंकमेचकचूचुके अमृतक्षीरभरिते राकाशशांककुचे पूर्वदि-गंगनया प्रकाशिते निर्वर्तितसंध्याविधिः सुहृन्मंडलपरिवृतः भुक्त्वा किंचिदि व-निगदन्नर्मालापान् निद्रासुखमनुबभूव ॥

तदनु संभवति तृतीये यामे जय जयोत्तिष्ठकलानिधिकुलललाम निखिलनृपालमौलिलालितपदकमल जीवसेनस्वामिन्नित्याद्युन्नमितकरवंदिबृंदपरि पठ्यमानविरुदावळिं अवाकर्ण्योत्थाय च तल्पात्परिमृज्य पाणितलाभ्यां नयनयुगळं विमलचेलाच्छादितविग्रहः निर्गत्य शयनागारात् नृपालो द्वारपालप्रदर्श्यमानमार्गः कुत्रचिदुशीरपरिमळीकृतशीतलसलिलपरिपूरित शशां ककांतशिलानिर्मितपात्रं कुत्रचिदुष्णोदकभरितकनककलशं कुत्रचिन्नात्यु न्नतस्फटिकशिलारचितपीठं कुत्रचित् क्षितितलनिक्षिप्तस्नानचूर्णभाजनं कुत्र चिद्विनिहितधौतकौशेयं कुत्रचिज्जलपात्रहस्तनारीजनमंडलमंडितं मज्जन-गृहमगमत.

प्रविश्य च तत्र स्फटिकपीठमधिरुह्य स्नापितश्च वनिताभिः धौतवस्त्र-परिमृष्टमूर्तिः सुरापगाफेनधवळं अंतरीयं परिधाय सूक्ष्मारुणकौशेयांतरित पूर्वकायः परिनिपतितबालातपारुणितकैलासइव अष्टमी शशांकानुकारिणि ललाटफलके विरचितकुंकुमस्थासकः, अलिकमलदेदीप्यमानलोचनो, हरइव-मज्जनगृहान्निर्गत्य क्वचिन्निक्षिप्तकनकघटाविनिहितसुगंधबंधुरकुसुममालासमुदयं क्वचित् सुवर्णस्तंभविलसद्दीपपल्लवं क्वचित् धवळधूमाकुलधूपवर्तिसंभारंक्वचित्

एलाचूर्णपरिमळसलिलपूर्णनवरत्नखचितकुंभं, क्वचिदाम्नायपारगभूसुरवर्गं देवालयमविशत् ॥

तत्र तुहिनमदशतिरस्कारिण्यंतरिते लंबमानस्थूलमुक्ताफलकलापेनव रत्नमालालंकृते पंचकलशमंडितशिखरे चतुष्कोणयोजितकनकपताके चतुर्भिः मरकतस्तंभैः उपशोभमाने निरन्तिरत्ननेत्रैः विवृतपंचवदनैः चतुर्भिः कनककेसरिभिः परिवृताधःप्रदेशे मंटपे विराजमानं, शंखचक्रगदादिदिव्यायुधपरिमंडितचतुर्भुजं मकुटमकरकुंडलग्रैवेयक केयूरहारनूपुरादिदिव्याभरणालंकृतं मृगमदतिलकसुंदरवदनारविंदं श्रीभूनीळासमेतं नारायणं समभ्यर्च्य, परिपठ्यमानस्वरमंजुळाम्नायकंठान् धृतधवळोद्गमनीयकमनीयान् ऊर्ध्वपुंड्रभासुरान् भूसुरान्नमस्कृत्य च कुत्रचित् सिताभ्रानुकारिमल्लिकाहारनिचयं कुत्रचित् वर्षर्तुवलाहकानुकारिमरकतमणिमालाभासुरं कुत्रचित् नक्षत्रसदृश वज्रखचिताभरणं कुत्रचित् शुनासीरायुधनिकाशनवरत्नमयकंठभूषणं कुत्रचित् विविध वर्ण पट्टवसनविसरं कुत्रचित् मलयजरसभरितकनकप्रतिग्राहं कुत्रचित् चक्राकार विन्यस्तकीरकायकांतिनिकाशनागवल्लीपल्लवतल्लजरमणीयतपनीयघटाकमनीयं— स्वकीर्तिधवळिताष्टकाष्ठाङ्गनाभिरिव श्वेतद्वीपवासिनीभिरिव चन्द्रलोक ललनाभिरिव गौरीमन्दहास रंजिताभिरिव मल्लिकापरागनिर्मिताभिरिव धृतदुकूलाभिः मौक्तिकमालालंकृताभिरष्टभिः वारविलासिनीभिः धवळितमध्यदेशं अलंकारनिलयमलंचकार ॥

तत्र ताभिरलंकृतोऽयं तस्मान्निर्गत्य च प्रतीहारीकरकोकनदोपरि विनिहितवामेतरपाणिपुंडरीकः आजानुलंबमानविशदकंचुकावगुंठिततनुभिः आगुल्फावसक्तधवळचंडातकैः मेखलीकृतरक्तचेलैः रक्तोष्णीषैः अंसोपरि

विन्यस्तकनकदंडैः पश्यत पश्यतगच्छत गच्छत दूरं दीयतां मार्गावकाशः इत्युच्चैर्भणद्भिः परिजनैः दापितमार्गावकाशः स्फाटिकशिलाफलकरचित भित्तिपरिगततया सुभगदर्शनां नीलमणिकुट्टिमप्रदेशप्रतिबिंबितसमस्तवस्तु- तया सलिलभ्रांतिमुपजनयंतीं समुत्कीर्णविविधवीरुद्रमणीयानां स्तंभानां अग्र- भागेषु धृतपाटलकंकटकैः आगुल्भावसक्तरक्तचंडातकैः निश्चलतनुभिः करधृतकोशावर्जितखड्गैः परिजनैः विसृष्टनिर्मोककृष्णकाकोदरहस्तैः उत्की र्णनागांतकविग्रहैरिव विराजमानां आत्मदिदृक्षया अभीक्ष्णंत्रिवलितकंधरैः नरपतिभिरुपशोभमानां कुत्रचित् संगीतविणावेणुकलापारगैः कुत्रचित् आम्ना- याम्नायांतकाणादपातंजलादिशास्त्रपारदृश्वभिः पंडितैः मंडितां सभां सुरपतिः सुधर्मामिव प्रविश्योत्थितान् कोरकितकरसरोरुहान् सामाजिकान् अनुमोदमानः शिरसैव, रत्नकटकशिखरं यथारविः तथा रत्नमयसिंहासनमारुरोह ॥

अधिरुह्य च तस्मिन्नृपे वारसुंदरीकरारविन्दवीज्यमानचामरकलापो- भयपार्श्वप्रणिपतन्निखिलनृपालमौलिमालापरिपत्पदकमले वीणादिविविधवाद्य संतुष्टहृदये द्वारपालः प्रविश्य सभां नमस्कृत्य च देव मखप्रियोनाम महर्षिः चतुर्भिः शिष्यैः समं देवदिदृक्षया द्वारि तिष्ठति एतदाकर्ण्य देवः प्रमाण मित्युक्त्वा विरराम ॥

तत्क्षणमेव सामाजिकैः सममुत्थाय गत्वा च नरपतिः द्वारदेशं आवद्धजनं आनाभिलंबमानकूर्चं आवेष्टितकक्षतलनिक्षिप्तकृष्णाजिनं दर्भपवित्र सनाथानामिकाङ्गुलिना दक्षिणहस्तेन विधृतकमंडलुं अक्षमालावेष्टितमणि- बंधेन वामपाणिनाधृतयोगदंडं जानुभ्यामुपरि वल्कलरचितकच्छं द्वादशोर्ध्व- पुंड्रांकिततनुं वयोवृद्धं वैश्वानरसदृशतेजसं लंबमानपाटलजटैः कृष्णाजिन

परिधानैः नातिवयोभिः वेदाध्ययनश्रमतनुतनुभिः चतुर्भिःशिष्यैः परिवृतं तं मखप्रियं नमस्कृत्य नीत्वा सभांकणं ब्रुस्याच्छादिते कनकपीठे समुपवेशयित्वा श्रौतविधिना समभ्यार्चत् ॥

ततश्च विनयाभिरामेण नृपालेन अपिकुशलं कच्चिन्निर्विघ्नं तपः इति-पृष्टोऽयं सभ्येषु तद्वार्ताशुश्रूषया प्राप्तेषु जोषंभावं भो राजन् त्वयि परिपालयति विश्वंभरां अमंगळस्य का वा वार्ता तथापि चंडदंष्ट्रो नाम क्रव्यादः मदाश्रमस्य नातिदूरे पर्यटन् तपोविघ्नमाचरति सं निहंतव्यः त्वयैवेति उक्त्वानिर्जगाम सभांकणात् ॥

तत्क्षणमेव अमात्यायत्तीकृतभुवनभारः खड्गमात्रसहायः अभ्रंकषध्व जपटालंकृतं चतुःपाटलघोटकसनाथपुरीभागं अग्निवर्मनामक सूताविरहिताग्रभागं द्वारदेशस्थितं रथमधिरुह्य वृत्रासुरवध सन्नद्धः सुरपतिरिव रराज स जीत्रसेनः तदनु सारथिना चोदितास्तुरंगमाः किंचिदिव विवृतवदनाः खलीनमसकृत् जिह्वामूलेन चालयंतः सितफेनाकुलसृक्किभागाः तिरश्चलोर्ध्वकर्णाः विनमित-पृष्ठदेशाः जठरेण क्षितितलं स्पृशंतः स्तोकमिवोन्नमितवालचामराः स्वेदजला-र्द्रीकृतविग्रहाः परस्परसंघर्षणजातस्वेदसितफेनलिप्तसक्थ्यंतःप्रदेशाः अत्य-र्कश्चवायुवैनतेयजवाः बहुदूरपरिदृश्यमानानपि महीधरमहीरुहान् क्षणादेव कुर्वंतः पृष्ठदेशतां निशाचरवासभूमिमगमन ॥

तत्क्षणमेव निशम्य घोटकखुरपुटनिस्वानं अमर्षेण आपतंतं संध्या-तपारुणितशिखरदळनिचयमिव नारिकेळतरुं शिरोविलसत्पाटलकुटिलजटापटलं स्थूलस्थूलपनसफलनिभस्थपुटितोत्तमाङ्गं सरीसृपफणान्तःप्रदेशनिकाशनिम्न-ललाटं देवजघकरचितसम्मार्जनीसंभारसंकाशदंडाकारारुणभ्रुवं तिंत्रिणीपत्र-

निभदभ्रनेत्रं शूर्पसदृशश्रोत्रयुगळं खर्वतरपृथुलघोणं गजगंडस्थलानुकारि समुद्दंडगंड गिरिगह्वरानुकारि भयंकरवक्त्रं गुहोभयपार्श्वनिपतन्निर्झरप्रतीकाश बृहद्दीर्घदंष्ट्रायुग्मं सालतरुमूलसदृशपीवरकठिनतरकंठं गंडशैलनिभस्थूलस्कंधं खदिरपादपशाखानुकारिभयानकबाहुयुगळं गिरिशिलातलसोदरविशालवक्षस्थलं उरुलंबमानकुक्षिं पृथुलतरोरुयुगळं इभचरणनिभोच्छूनजंघातलं विशाल चरणयुगळं गजचर्म वसानं तदुपरि मेखलीकृतधमनिजालं हरमिव, धृतत्रिशूलं, षण्मुखमिव अद्भुतशक्तिं, पुण्यजनाभिनन्दितमपि पुण्यजननिन्दितं प्राणि संहारमार्गप्रवृत्तबुद्धिमपि सदावनमार्गसंचारबुद्धिं सुरारिमपि सुरातिप्रीतिं मन्युशत्रुमपि मन्युजन्मभूमिं तं निशाचरपतिं चंडदंष्ट्रमपश्यत् ॥

दृष्ट्वा च जीवसेनः तस्यनिग्रहं कर्तुमुद्यतोऽभूत् ॥ तत्रांतरे तरसादनः स्यंदनोपरि निपत्य प्राहिणोत् सूतं वाजिभिः समं यमपुरीं॥ तत्क्षणमेव स्यन्द-नादवरुह्य क्षितितलस्थितस्य तस्य राज्ञः खड्गधारावाजिधारामयं रुरोधातिरुषेव यातुधानशरीरात् रुधिरधारामुत्पादयामास ॥ तथापि न्यक्कृत्य क्षतबाधांराक्ष-सोयं रोषादुत्क्षिप्तरूक्षाक्षिपक्ष्मा क्षितिपालमुत्क्षिप्य रूक्षपाणिभ्यां निक्षिप्य-स्कंधतले क्षितितलं पादाक्षेपेण क्षोदमिव कुर्वन् निर्जगाम॥ तादृक्षंरक्षः समीक्ष्य समिद्धदक्षः क्षितिपः कौक्षेयकेण क्षणात्तदुत्तमांगमच्छिनत् ॥ कृत्तं च तदुत्त मांगं स्रवद्रुधिरधारं प्रसृमरकिरणनिकरं गगनतलान्निपतदंगारकमंडलमिव पपात वसुमत्याम् ॥

तत्क्षणादेव गंडूपायमाणबुद्बुदाकुलरुधिरकंठात् नृत्यतः कबंधात्कोपि तेजस्समुदयः नयनपथार्गळायमानः समुत्थाय प्रसृमररत्नकांतिवक्त्रात् उदय-गिरिशिखरात् दिवाकर इव असकृच्चालितपक्षयुगळं रत्नखचितं पंचकलशं

हैममयं सुवर्णसुममालातोरणं समुत्कीर्णस्वर्गद्वारणं मेरुसमानं विमानं समारुरोह ॥

अधिरुह्य च तत्र विराजमानं दिव्यनारसुंदरीकरारविंदवीज्यमानचामर दिव्यालंकारं पुरुषाकारं तेजोवरं स नरपतिः विस्मयेन विलोक्य नमस्कृत्य च कृताञ्जलिः उन्नमितवदनारविन्दः भोः कस्त्वं देवयक्षकिन्नरगंधर्वेषु एवंविधनिहीननिशाचरजन्मनः किं वा निदानं भणतु भवान् श्रोतुकामोस्मीत्य-पृच्छत्॥ तदनु स तेजोमयः पुरुषःप्रत्युपकर्तव्यमस्माइति निश्चित्येवमाह ॥

नक्तमालतमालरसालासनाश्वत्थदधित्यादिवृक्षषंडमंडितस्य शुकपिकादि शकुनिपरिवृतस्य सुंदरीमुखस्येव तिलकालंकृतस्य विटकुलस्येव गणिका सनाथस्य मिथिलापत्तनस्येव वैदेहीजन्मस्थलस्य विष्णुवक्षस्थलस्येव लक्ष्म्या क्रांतस्य पाकशासनपत्तनस्येव विरचितरंभावासस्य महेश्वरकेतनस्येव वृषभा-लंकृतस्य द्वारकानगरस्येव मुसल्यधिष्ठितस्य, वैकुंठस्येव विराजमानमुकुंदस्य अलकापत्तनस्येव वास्तव्य कुबेरकस्य, लंकानगरस्येव पलाशाकुलस्य, नरपतिशी-र्षस्येव सितच्छत्रालंकृतस्य, श्रीनंदकुमार करतलस्येव वेणुसनाथस्य, युध्धां-कणस्येव शरकुलस्य राघवबलस्येव मर्कटकुलनिचितस्य, रमणीयपद्माकरस्येव पुंडरीक परिवृतस्यापिभयकरस्य, नगरस्येव वास्तव्यभूदारस्यापि विगतजनसंचा-रस्य, गगनतलस्येव पर्यटद्दक्षपरपि अतिकृच्छ्रदर्शनीयस्य, अवरोधसदनस्येव संचरन्महिषीकुलस्यापि विविक्तस्य, विष्णुपदस्येव हरिविरचितवासस्यापि संचर-न्निशाचरस्य, स्वर्गस्येवअनवरतविरचितकौशिकवासस्य रमणीयाप्सरसश्च, पातालविष्टपस्येव परिवृततमोलांधकारस्य नागाकुलस्यच, शवशतति चित-स्यापिपिशिताकुलस्य, दंडकारण्यस्य, मध्ये विराजमानायां नात्युन्नतस्य शिलो-

चयस्य गुहायां वरमालिनीनाम नरपतिदुहिता द्वादशवयः परिष्कृतेन चारु-वक्त्रनाम्ना सुतेन सममुवास ॥

स चारुवक्त्रः नखंपचरजोव्याकुलायां वनभूम्यां तत्र तत्र पर्यटन् कंदमूलफलान्याहृत्य समर्प्य च जनन्यै तया दत्तैश्च कंदमूलफलैः पुपोष स्वोदरम्। कदाचित् तादृक्षसुतदर्शनदुःखेन रुदंतीं तैलसंस्कारविहीनतया धूलि धूसरितकेशपाशां मुक्तमुक्ताद्याभरणां धृतश्वेतचेलां कंदमूलाद्याहारतया अतिकृशतनुं तीक्ष्णतरातपसंचारेण कृष्णां तनुकांतिं कान्तारवासविक्लवां जननीं स चारुवक्त्रः समवलोक्य अयि मातः कुतो रोदिषि निवेदय मे दुःखकारण-मित्यपृच्छत् ॥ इति तनयेन पृष्टासा चेलांचलेन परिमृज्याश्रुजलं समस्तमपि दुःखं गूहमाना वक्तुमारभत शोककारणम् ॥

अस्ति हि सकलाद्भुतोद्भवभूमिः अलकेव धनसमृद्धा सुरनगरीव विबुधाकुला नारायण तनुरिव समस्तवस्तुमयी वैजयंतीनाम नगरी ॥ यस्याः सदनशृंगाणि कुर्वन्ति कुशलानुयोगं नाकलोकस्य, यस्य च कानिचिन्निकेतनानि वज्रखचितकुड्यानि मेचकघनमेघाक्रांतमध्यदेशानि अनुकुर्वंति भगवतो-नीलांबरस्य, कानिचित् सदनानि इंद्रनीलमणिरंजितानि विडंबियंति नारायण तनुश्रियं, भूपद्मरागरंजितानि कानिचित् कनकनिकेतनानि रत्नसानुसोदराणि, यस्यां च विकलांगापत्यात्ययबंधुनिधनदारिद्र्यदस्युदुःखानां न याति वार्ताऽपि-श्रवणसरणिं, या च रसालबडिलपाटलबकुलमल्लिकामलककपित्थनक्तमाल तमालमालतीपलाशनवमालिकाचंपकचांपेयमल्लिकानागवल्लीपूगमागधिकुंदसिंदु-वारकरवीरकरीरफलपूरादिमहीरुहाभिरामेषु आरामेषु, शुककलरवशिखावल कोकिलादिपतगनिस्वानैः मरन्दनिष्यन्दसुन्दरारविन्दबन्धुरतटाकपर्यंटत्करे-

टुवरटायुमराळसारसचक्रकोकादिजलचरपतगारवैः कुसुमापचयोत्सुकललनाजनक्रूरचरणाग्राभरणरणितैः कुसुमपरिसरपरिभ्रमद्भ्रमरशकुंतिभिश्च मुखरीक्रियते। तस्यामासीदखिलनरपतिमकुटतटघटितरुचिरमणिगणानुषंगादिवारुणचरणपल्लवः पाकशासन इवाद्भुतायुधहतमहीभृत्पक्षविजृंभः मेरुरिव रत्नकटकः हरइव राजमौळिः रविरिवासुलभदर्शनः शरत्कालइव राजहंसपरिवृतः वैनतेय इव सत्पथसंचारः भुजगपतिरिव विधृतभुवनभारः प्रथमयुगविलासइव धर्मैकवसतिः चित्रपटइव विविधवर्णोपलालितः चन्द्रइवाह्लादितसकलजनहृदयः दर्शनसन्दर्शनविमलहृदयः तव पिता विमतकेसरी नाम राजा ॥

वृषस्कन्धाभिधानेन सुहृदा समं यस्मिंश्च राज्यलक्ष्मीः चंचलेति चिरकालांनुवर्तमानामपकीर्तिं परिहर्तुकामेव स्थिरतामवाप ॥

यस्य च दशरथ इव सुमंत्राविरहितः योगीव एकत्रैव स्थित्वापि प्रज्ञाप्रत्यक्षीकृतसकलविषयः सरित्पतिरिव राजलक्ष्म्युदयहेतुः शुक्लपक्षइव अभिवर्धित राजः राकाक्षपाकरइव सकलकलापूर्णोपि निष्कळंकः धिया न्यक्कृतसुरगुरुः मरुन्मालोनामाभवद्भूसुरपतिः सचिववरः ॥

यश्च वृषस्कन्धेन विना प्रमदवनविहारं मलिललीलां मधुरतररसभरितभोजनं मृगयामक्षक्रीडां मनोहरहारादिभूषणं मनोहरभाषणं स्नानमन्यानि च कार्याणि नाचरतिस्म भार्यासंश्लेषणावसरमंतरेण ॥

एवं स्थिते कदाचित् लिप्तसुगन्धितैलैः प्रसाधिनीप्रसाधितैश्च केशपाशैः विरचितवेणीं तदुपरि विन्यस्तमल्लिकांमतल्लिकामालां चूर्णवासितकुटिलालकां वज्रखचितकर्णिकालंकृतकर्णां मृगमदतिलकालंकृतललाटफलकां कन्दर्पकार्मुकनिभोन्नमितभ्रुवं अंजनपरिष्कृतनेत्रसहस्रपत्रां अंजनशलाकालिखितापांगां

2

कंदर्पदर्पणायमानकपोलफलकां चंपककोरकनिकाशनासिकां तांबूलचर्वणद्विगुणितारुणिमबिंबाधरां मलयजरसलिप्तकंचुकंधरां नवरत्नमयाभरणमंडितस्तनमंडलां कनकतंतुरचितहंसमिथुनसनाथांचलं दुकूलं वसानां पट्टमयकंचुकां रमणीयतरकेयूरालंकृतबाहुलतां विविधसूक्ष्मतरवलयमनोहरमणिबन्धां अंगुळीयालंकृतांगुळिपल्लवां चंचल-रचितरळतररुचिरकनकमेखलालंकृतमुष्टिग्राह्यमध्यां नूपुरमनोहरपदसरोरुहां दन्तसमुत्कीर्णसालभंजिकाराजिविराजमानं समास्तीर्णधवळतरतल्पं मणिमयमंचमधिष्ठितां एकाकिनीं मामवलोक्य स वृषस्कन्धः स्मरपरवशहृदयः मदुपकंठं कंठालिंगनेच्छया मंदंमंदमुपससर्प ॥

क्षणादेव मन्चादुत्थाय आकुंचितवक्त्रा लज्जया अन्यतो गंतुमुद्यताभवम् तदा मन्मार्गार्गळीभूय भिया कंपमानविग्रहः करवस्त्रेण मुहुः वदनतलोल्लसत् स्वेदसलिलबिन्दुसन्दोहं परिमार्जयन् असकृत्पश्यन्नवरोधभवनमभितः साध्वसशुष्कजिह्वाग्रालिह्यमानाधरोष्ठः स्खलदक्षरगणघटितवाक्यः सोऽयमेवमवोचत् ॥

अयि चन्द्रानने चित्रमेतत् त्वन्मुखचन्द्रदर्शनमात्रेण मोहान्धकाराकुलितः किंकर्तव्यतांधोस्म्यहं उन्मत्त इव स्प्रष्टुमुद्यतः साध्वसेन तथैव जोषमस्मि क्षणादेव शंबरारिशरविशीर्णहृदयः स्प्रष्टुकामोस्मि एवमेव क्षणात् स्प्रष्टुमपि त्यक्तुमप्यनीशः पश्य दीर्घतरनिश्वासमात्रेण मनःसमाधीयते कुरुष्व कृपामिति बहुधा विजल्पन् पादयोः प्राणम्योदतिष्ठत् ॥

तदा मयि दुःखेन साध्वसेन कोपेन च जर्झरितहृदयायां खलःगोमुखव्याघ्रइव शादपिहितकूपइव च प्रदर्शितविस्रंभः सुहृदिव मत्पतिसकाशमुपेत्य तेनैव संवर्धितः मातृसमानां मामभिलपसि बत कस्मादन्यस्मादकार्याद्वा

परावर्तसे धिक् जीवितं न कदाचिदपि श्रुतः किंपरयोषाभिलाषिणां चपलम नीपाणां पुरुषाणां पाकशासनरावणकीचकप्रभृतीनां उदंतः इति निगदंत्यां तत्रांतरे मत्सखीं मकरिकामागच्छंतीं अवलोक्य त्वरया स निरगात् ॥

गते च तस्मिन् उपविश्य च शयने रुदंती निपतदश्रुकणिकाकुलित-कपोलफलका वृषस्कन्धोदंतमत्रादिपं पृच्छंत्यै तस्यै मकरिकायै। ततश्च सा तु गत्वा त्वत्पित्रे विमतकेसरिणे निवेदयित्वा मद्दुःखमात्रं तमानयन्ममोपकंठं आगत्य च रुदंतीं मामवलोक्य मत्पार्श्वएवोपविश्य करवस्त्रपरिमृष्टकपोलफल-कतलस्खलदश्रुसलिला तत्कोमलकरकमलदलसमुत्सारितचूर्णकुंतला मृदुभा-षिणी तेन पृष्टाहमार्य यदि मयोच्यते मद्वचने अश्रद्धया तस्मिन्वृषस्कन्धे अतिस्नेहेन च मद्वार्ता विफलीभवति अतो वक्तुमपि बिभेमीत्यवदम्.

तदा तेनाश्वासितायां मयि कथयंत्यां तदुदंतं अत्यमर्षेण दशनकटकट-रववाचालितदंतपंक्तिः आघूर्णितलोहितलोचनतारकः भ्रुकुटितभ्रूलतः दशनश्रे-णिदश्यमानरक्ताधरः प्रादुर्भवद्दिवाकरबिंबइवात्यरुणवदनः गिलन्निव भुवनं तन्वन् पादाभिघातेन गर्तमुर्वीतले चालयन्निव करतलास्फालनरवेण कुलाचलं क्षोभयन्निव हुंकारेण महोदधिं दहन्निव कोपानलेन त्रिभुवनं विडंबयन्निवा-डंबरेण नरहरिं निजावलग्नलुठत्कोशात् प्रचलत्करवाललतां सरभसमादाय तज्जिघांसया त्वत्पिता क्षणान्निर्जगाम ॥

ज्ञातवृत्तांतः समीकनिपुणः सोपि वृषस्कन्धः सरभसमागतं तव तातमवलोक्य वेगेन यावत् सकाशमाजगाम त्वत्तातः तावदेकत्रैव स्थित्वा अत्यमर्षेणागतवति तव ताते अपक्रम्य अपरांगात् तद्बाहुयुगळं गृहीत्वा गैधारग्राहं अन्येन च पाणिना तत्करखड्गमादाय चिच्छेद त्वत्पितुरुत्तमांगं

क्षणादेव निपत्य क्षितितले स्फुरंतं कबन्धं असकृद्विवृतवदनं परिलुठदुत्तमांगं च दर्शंदर्शं शोकपारावारनिमग्नहृदयेष्वपि तत्रत्येषु सद्यः पाटितवनकरि कुंभपीठेन मृगेन्द्रेणेव अतिकुपितेन तेन वृषस्कन्धेन जनितभयेषु अश्रुसलिलापूरितलोचनेषु मूकेष्विवोररीकुर्वत्सु जोपंभावं अहं तावत्साध्वसेन उपजातकंपा शोकवारिपूरपरिपूरितनयनतया अदृश्यमानलक्ष्म्या विसृष्टसकलरमणीयाभरणा हृदयजनितशोकानलेनेव शोपितसलिल शुष्करसना परिधृतधवळांशुका निर्गत्य प्रासादादेकाकिनी तेनैव धवळवसनेनावगुंठितमस्तका विरळतरमनुजसंघात् नगरमार्गान्निर्जगाम ॥

तत्रत्याः केचिदपि मनुजाः अपरिचिततया दारिद्र्यसमुचितवेषतया च मां राजमहिषीं नाज्ञासिषुः । निर्गत्य च नगरादसूर्यं पश्याप्यहं गगनमध्याधिगतदिवाकरतया आतपपरितप्यमानमस्तका क्वचिन्नखंपचरजोराजिरूक्षे क्वचिदतिनिशितकंटकपटले क्वचिच्छार्दूलनखोत्खातजातवातायुरुधिरबिन्दुदंतुरे क्वचिच्छल्लीशतशिखाशलाकाकुले क्वचिदतिहरितदूर्वासनाथे क्वचित्पलाशतमालादि पादपपादप्रच्छायशयानैः रोमंथासक्तैः कुरंगमंडलैः उपशोभमाने क्वचिद्वनकुंजरकरपतितैस्सल्लकीपल्लवैररुणीकृते क्वचिद्बहुदूरनिबद्धाभिः पिपीलिकापंक्तिभिर्मनोहरे क्वचित्पल्वलशतैः परिवृते क्वचिद्विविध लताजालदंतुरे क्वचित्सर्पनिर्मुक्तनिर्मोकसनाथरन्ध्रदेशैः वल्मीकैरुपशोभिते क्वचित्शुनासीरदंभोळिपातितपक्षैः पर्वतैरिव कंठीरवकरताडितकुंभपीठैः उपरतैः करिनिकरैरतिभयानके निम्नोन्नते वनमार्गे धावंधावं अतिकृच्छ्रेण स्वेदजलधारासिक्तविग्रहा तृषया भिया व्यथया च शुष्कवदना अश्रुसलिलक्षालितकपोला अरुणतरचरणपल्लवा वनभूमिमेनामगमम् ॥

आगत्य च पृथुलविद्रुमानुकारिणीभिः फलमंजरीभिरतिमनोहरस्य अरुणतरफलनिकरसंभूतैः अतिहरितपलाशपटलैः अरुणमुखानां शुकनिकराणां भ्रांतिमुपजनयद्भिः भासुरस्य अतिदीर्घैः पृथुलतरैः दिगंतप्रसारितैः शाखाशतै स्समाकुलस्य विविधशकुनिनिकरकलकलरवैः शब्दापितस्य आकल्पंस्थिरतामुत्पादयितुमिव विरचितपृथुलस्तंभैः जटासहस्रैस्सनाथस्य वनदेवतानां विशाल शालासहस्रैरिव अंतःप्रदेशैर्विराजमानस्य विन्ध्यस्येव अरविन्दबन्धुसुधांशुमार्गार्गळीभूतशिखरस्य वटविटपिनः अवरोधवधूजनमिव असूर्यंपश्यं रसातलमिव परिवृतान्धकारं अमरावतीपत्तनमिव कौशिकसनाथं अतिविशंकटमविशं मूलतलं ॥

प्रविश्य च तत्रोपविश्य मनस्येवमचिंतयं निखिल जनविगर्हितं दुःखस्य सदनमिव सौख्यकमलषंडस्य प्रालेयमिवातिदुस्तरं आमरणवर्तिवैधव्यं अविस्मरणीयं पतिदुःखं अतिक्लेशकरो वनवासश्च एवं तेषां अनुभवस्य निदानभूतैः किं वा प्राणैः इति विचिंत्य च तस्मादुत्थाय इंधनानि तत्र तत्र निपतितानि आहृत्याहृत्य तैर्विरचय्य च चितामेकत्र विशालां द्रुपदा द्रुपदमभिहत्य तज्जनितमनलं तस्यां न्यक्षिपम्॥ निक्षिप्ते च मया तस्यामग्निकणे निजसख्यास्सुरापगायाः दिदृक्षया समुद्गच्छन्निव यमुनाजलप्रवाहः अत्यधिकतया निर्भिद्यभूमिमपि वेगेन निस्सरन्निव रसातलादंधकारः नन्दनवनश्रीदिदृक्षयेव आस्वर्गमुपचीयमानः तमालनिकरः मनुजानां दिगंतराळेषु दिगंगनाकेशपाशसन्देहं नीलकंठानां गगनतले कादंबिनीभ्रांतिं घूकानामामोदं कोकानां शोकं च जनयन् शार्दूलचित्रकायप्रभृतीनां सत्वानां अंतकायमानः वनांकणं शून्यमिव कुर्वन् धूमनिकरस्समुदचरत् ॥

तदनु फूत्कारायमाणे मातरिश्वनि प्रवाति प्रथमं चितांतरात् निर्ग-

च्छद्भिः ज्वालापल्लवैः किसलयशंकामुदजनयन् वैश्वानरः क्रमशश्चाक्रांतसकलेन्धनः दिशिदिशि विप्रकीर्णस्फुलिंगनिकरः विजृंभमाणज्वालामालः चटचटात्कारवाचालितदिगंतः ज्वालारसनाभिरिवालिहन् गगनतलं समंततः प्रसृमरज्वालाबाहुभिः आलिंगन्निव दिगंगनाः पाकशासनचापइव विविधवर्णः अरुणइव रक्तीकृतगगनतलः विरिंचिरिवकमलयोनिः भीष्मइवनिशितशरशताहुतिःकुपितपार्थसारथिरिव प्रदर्शितचक्रज्वालः काभिश्चित् अचिरनिहतदैत्येन्द्ररुधिरसिक्तनरकेसरिकेसरकलापानुकारिणीभिः अरुणतराभिः काभिश्चित् मरकतरचितशलाकानुकारिणीभिः नीलप्रभाभिः काभिश्चित् दीर्घतरदूर्वानिवहसदृशाभिः हरितकांतिभिः काभिश्चित् सुरापगाप्रवाहनिभाभिः विशदप्रभाभिः ज्वालाभिः देदीप्यमानः संत्रासितपत्ररथनिकरः भयंकराकारः जज्वाल ॥

एवं ज्वलंतं तं वीतिहोत्रं प्रदक्षिणीकृत्य यदा निपतितुमुद्यताभवं तस्मिंस्तदा वैहायसमानुष्टुभं वृत्तमिदमश्रौषम् ॥

श्लो ॥ राकेन्दुवदने कुक्षौ तवाद्य निवसन् शिशुः ।
अग्रे रक्षति मा भैषीः तन्मा प्राणानिमांस्त्यज ॥

(ग) इत्याकर्ण्य च तदतिविस्मयेनाहमचिंतयम् अहो ममासुविनाशेपि किंचिदप्याशयो नेति दृश्यते दैवस्य। कियान् कालः मया विधवयधृतप्रणया अपनेतव्यः न जाने हा नियते विधाय च मामेतादृश्याः दुःखापरंपरायाः शरव्यं इह मदीयं मरणमपि नाभिनन्दसि हंताथवा विरचितस्य पूर्वं पापकर्मसमुदयस्य फलमिदं अन्यच्च यद्यद्भव्यं सिद्धासि भवतु तदनुभवितुमिति विचिन्त्य च पतिशोकताम्यमानकंठा अश्रुकलुपितोच्छूनलोचना कृच्छ्रेण एनां गुहामविशम् ॥

तदनु क्रमशः भगवति मार्तंडे कुट्मलीकृतकमलषंडे चितानलज्वालाति- तप्ततयेवारुणमंडले रक्तीकृतपश्चिदिगंगनांतरंगे अभ्रंकषज्वालासंतापासहिष्णु- तयेव विसृज्यांबरांक्रमणमधिगतवति चरमगिरिशिखरं समंतादभिपतद्भिः अन्ध- कारनिकरैरिव डयमानैः वायससमूहैः निजकुलायाभिमुखंप्रस्थितैः कलरवकल विंकश्येनखंजनकंकशुकपिकदात्यूहदाक्षाय्यवर्तकवर्तिकाप्रभृतिभिः विविधवर्णम नोहरैः अतिमधुररवैः पतत्रिनिकरैः सलिलार्द्रीकृतपक्षयुगळैः कदळीवनाभि- लापिभिः करेदुचक्रकादंबप्रभतिभिः जलचरविहगैश्च वितानितं गगनतलम् ॥

तदनु क्षणेन प्राप्ते पतंगनिकरे नीडमिव पतंगे सलिलनिधिं गुहांतरेभ्यो वहिर्निस्सरतां घूकानां घूंकारघोषैः तत्रतत्र पर्यटतां वनमशकपटलानां झंकारा रवैः वनसत्वानां निर्घोषैश्च मुखरीकृतमरण्य तदनु शिलातलतल्पं दक्षिणबा- हुमुपधानं च विधाय शिश्ये ॥

अहो नियत्या निद्राप्यपहृता विबुद्धेव कंचित्कालं शयाना कंचिकालं वनमशकसन्दोहैः दष्टा तत्पीडासहिष्णुतयोत्थिता च कृच्छ्रेण युगायमानां तां नि शामनैषम् अथ उदयगिरिस्तंभोत्थिते निजकराळकराग्रविदारितभयंकरां- धकारहिरण्यकशिपौ रुधिररक्तमुखभागे तोपितद्विजव्रजे नरकेसरिणीव विल- सति भगवति भास्वति उद्धूयमानपक्षपुटाः उन्नमितकंठा नीलकंठाः केकारवैः पक्षत्यंतःसमुत्सारितेन चरणेन निवार्य शिरःकंडूं विवर्त्य कन्धरां चंचूपुटेन पिंछमूलजातकंडूश्च कुलायात्प्रस्थिताः पत्ररथव्राताः कलकलरसितैः वन्दिन इव मां प्राबोधयन् ॥

उत्थाय च ततो नातिदूरवर्तिनि संफुल्लकमलकल्हारमनोहरे जलचर- पतत्रिनिकरकलरसितवाचालिते विमलसलिलपूरिते सरसि स्नात्वा कन्दमूल- फलान्याहृत्य च सुगन्धीनि कुसुमान्यपचित्य निधाय च नारिकेळसंपुटके

गुहामेनामागमम् । आगत्य सभभ्यर्च्य च भगवंतं श्रीमंतं नारायणं तान्येव कन्दमूलफलादि भुक्त्वा चागताभ्यः पृच्छंतीभ्यो मह्यु:खकारणं पुळिन्दसुन्दरीभ्यः मदुदंतं वदन्ती कालमपानयम् तदनु दशमे मासे भवानजायत प्रादुर्भवति त्वयि मन्देतरानन्दबन्धुरेन्द्रादिवृन्दारककरारविन्दमुक्तनन्दनजमन्दारकुसुमसन्दोहस्यन्दमानमरन्दागतेन्दिंन्दिरवृन्दान्धकारितः गन्धर्वगानवृन्दारकवारसुन्दरीलास्यतुन्दिलः विराजमानारविन्दबन्धुः मन्दमन्दस्पन्दमानचन्दनाद्रिगन्धवहः अधिकानन्दकन्दलितकुसुमकन्दुकनर्मस्यन्दमानघर्मबिन्दुसुन्दरमुखारविन्दपुळिन्दसुन्दरीसन्दोहः स वासरो रराज ।

तव तदा शबरललना एव धात्र्यः, व्रततितितिनिबद्धांचलेन चेलेन डोलाकर्म, तत्र तत्र पर्यटंतः खद्योता एव मणिदीपाः, ताभिः पुळिन्द्रसुन्दरीभिः आहृतं क्षीरमेवाहारश्चाभवत ॥ क्रमशश्च विवर्त्य तनुमधोमुखं असकृन्निपतंतं त्वामुद्धृत्योद्धृत्य कराभ्यां उत्तानशयं कुर्वन्तीषु शबरसीमन्तिनीषु करचरणमुत्सार्योत्सार्य सत्वरमपसार्य च भ्रकुटीकृत्य भ्रूलतां त्वयि रुदति तासु करतलतालशब्देन हासयन्तीषु त्वमपि रविरिवादशनवदनः सृक्किभागान्निस्सरन्तं लालाजलबिन्दुसन्दोहं मुक्ताफलच्छविमपि पद्मरागमिव वदनकान्त्या विरचयन् जहसिथ ॥

एवं हसन्तं त्वामहमहमिकया आगत्यागत्य चुंबनेच्छया पुरःप्रसारयन्त्यः अधरोष्ठपुटं ताश्च शबरकान्ताः बाहुलताभ्यामादायादाय दृढतर माश्लिष्य च मुहुरधरपल्लवं कपोलपल्लवं च चुचुंबुः ॥

क्रमेणजानुकरकमलसाह्येन शश्वन्मन्दंमन्दं गन्तुमुद्यतः तत्रतत्र निपत्य पुनश्चातिकृच्छ्रेणकिंचिदिवोत्थाय रुदन्नतिमधुरासंपूर्णेन वचसा मामाह्वयन् मुहुः श बरस्त्रीभिरेव लालितोऽभवः ॥

त्वन्मुखसौन्दर्यमवलोकयन्तीभिः ताभिरेव चारुवक्त्वइत्याहूतश्च। क्रमशः तत्रतत्र जानुकरकमलतलसाह्यः ससंभ्रमं परिभ्रमन्नात्युन्नतां शिलामवलंब्योत्थाय च सन्ध्यातपारुणिते गगनतले विराजमानाः िचतस्रः ताराइव अत्यरुणे वदनतले विलसतीः विचतस्रः रदनकलिकाः प्रदर्श्य हसन् किंचिदुन्नामितवदनः वल्गितपृथुसक्थिः मन्दंमन्दं नृत्यन् तासां पुलिन्दकन्यकानां अवलंब्यांगुलिपल्लवं व्यत्ययविनिहितांघ्रिन्यासः तत्रतत्र पर्यटन् विविधशकुनिकुलकलकलारवं श्रावंश्रावं विविधवर्णान् शकुनिनिकरान् दर्शंदर्शं च स्मितमनोहरमुखारविन्दः कृततालः प्रासादादधिकतरं सुखमवर्धथाः ॥

तदनु विपिनवर्त्मनि पर्यटन् कुंजकुंजेषु शयानैः केसरिशार्दूलप्रभृतीनां नृशंसानां सत्वानां शावकैः क्रीडन् तत्करनखरस्पर्शक्षतरुधिराकुलं शरीरं स्वयमेव दर्शंदर्शं रुदन् प्रदर्शयन्मह्यंच धूलिधूसरितविग्रहः मदंकमलंकृत्य तत्रान्तरे प्रधावन्तं हरिणशावकमवलोक्य स्मितमधुरवदनारविन्दः तज्जिघृक्षया समुत्थाय मदंकात् अनुधाव्य च अलब्धमृगशावकः पुनरप्युपेत्य मदुपकंठं समाश्लिष्य कंठं देहि मे मृगशावकमिति याचमानः सलिलपूरितलोचनः स्वादुना कलेन समाश्वासितोऽभवः ॥

एवं बहुविधां रमणीयतरां तावकीं बाललीलां अनवलोक्यैव उपरतं त्वत्पितरं स्मारंस्मारं अटवीपर्यटनेन कष्टमनुभवन्तं भवन्तं दर्शंदर्शं च दुःखितासीत्यब्रवीत् ॥

निशम्य च परुषतरमेनमुदन्तं मुहूर्तमिव विचिन्त्य प्रणम्य च जननी चरणसरसिजं अयि मातः क्रियतामाशीः भयंकरं विरचय्य तपः नारायणप्रसादेन विजितनिखिलनृपालः जित्वा च तं नृशंसं वृषस्कन्धं पातयित्वा च

त्वत्पदकमलयोः करिष्यामि त्वां वीरमातरमिति प्रतिजज्ञे। सा तु तदा वरमालिनी तात चारुवक्त्र तव मनोहरं मुखसरोरुहमवलोकयन्ती विस्मृत्य पतिमप्युपरतं कथंचित् कालमपनयामि निर्गते च त्वयि तपसे न जाने केन वा कथं वा कालोऽपनेतव्य इति, यद्यपि कर्तव्यमेव हि विपक्षमूलोत्पाटनमिति बहुधा परिदेवयन्ती बाष्पाविललोचना दृढतरमाश्लिष्य बालकं प्रचुम्ब्य कपोलफलकं प्रमृज्य च रोषजातवदनतललसत्स्वेदकलिकां तात तथैवाचरेति प्राहिणोत् तं तपसे ॥

अनुगृहीतश्च जनन्या बालोपि ध्रुव इव निर्भीकः निर्गत्य निर्झरझरीसनाथोभयपार्श्वं विशदतरोभयपार्श्वलंबितदुकूलालंकृतमिव धात्ववलीढमध्यदेशं रक्तपटीरचर्चितमिव प्रसूनप्रचुरलताजालावलीढसानुं सुममालामंडलमंडितमिव अतिहरितदूर्वाव्रजविराजमानाधःप्रदेशं हरितपटवसनपरिधानमिव एतादृशेनालंकारेण अहमपि महीभृदिति निगदन्तमिव वृन्दारकसेनावृन्दमिव पुरस्कृतगुहं रणांकणमिव प्रसृमरसिंहनादं नारायणमिव वनमालावलीढं चन्द्रमिव शशधरं वारसुन्दरीविग्रहमिव भुजंगालिंगितं अर्णवमिव निपतितसरिन्निकरं विशालपादमपि विगतसंचारं अत्युन्नतशृंगमपि अवृषभं एकं पर्वतमधिरुह्य तच्छिखरे भयंकरं तपश्चचार ॥

एतस्य च तपोवेगेन परिक्षुभिते त्रिजगति अतिभीतः पाकशासनः गीर्वाणगणपरिवृतः निर्गत्य नगरात् कैश्चिदुन्नमितबाहुभिः दक्षिणोरुतलविन्यस्तवामचरणनलैः क्षितितलविनिहितप्रपदैः कैश्चिदाबद्धपद्मासनैः लंबमानजटैः निभृतोन्नमित पूर्वकायैः बद्धांजलिभिः निमीलितलोचनैः कैश्चित् कौपीनमात्रवसनैः वायुमात्राहारतयाऽतिकृशशरीरैः उन्नमितवक्षस्स्थलास्थिपंजरैः अधो

मुखं तपश्चरद्भिः मुनिजनैस्सेवितं तिर्यक्चर्चितभस्मत्रिपुंड्रधवलितललाटैः लोचनोपान्तलिप्तसितभसितैः भस्मधवलितशरीरैः अजिनपरिधानैः दीर्घतरकूर्चैः चक्राकारनिबद्धपाटलजटाजटिलोत्तमांगैः रुद्राक्षवलयाश्लिष्टकंठैः योगदंडशिखर-विनिहितबाहुमूलैः शिवशिव हरहर शंकर शंकरेत्युच्चैः कूजद्भिः लब्धरुद्रता द्रूप्यैः शैवैः दंतुरं, प्रालेयबिन्दुसन्दोहदुर्दिनतया विटपिपटलान्धकारिततया च कुत्रचित् स्रवन्त्या कुत्रचिदुन्नतशिलातलात् पतन्त्या कुत्राचित्कंटकलता जालोपरि संचारेण च शतधाविशीर्णया सिन्धोर्जिगमिषयाऽभिसारिकयेव कुत्र-चित् शिलारन्ध्रसरण्या निस्सरन्त्या च जह्नुः निजश्रवणसरण्या मामेवमेव व्यसृजदिति प्रदर्शयन्त्येव कुत्रचित् भगीरथप्रार्थनया नाकलोकादवतरन्तीं मां परपुरुषः शंकरः पस्पर्शेति लज्जया दुःखेन च भृगुपतनमाचरन्त्येव कुत्रचिदु-न्नतशिलोपरि उत्पतन्त्या समधिरुह्यचोन्नतदेशं पश्यन्त्येव वल्लभं कुत्रचित् महागर्तदेशेनिस्तरळतया चिन्तयित्वा च पतिं संकल्पयंत्येव कुत्रचिदुच्छ्रित-घोषतया प्रलपन्त्येव कुत्रचित् सदासंचारेण दूरीकृतनिद्रयेव कुत्रचित् अति-सूक्ष्मप्रवाहतया लब्धकार्श्ययेव कुत्रचिदतिमन्दगमनतया जगदखिलमपि तृणायमन्यमानयेव कुत्रचिद्धावन्त्या निर्लज्जयेव कुत्रचित्खरतररविकिरण निकरतप्ततया संजातस्मरज्वरयेव स्वपुटिततलसंचारेण प्रनृत्यन्त्या उन्मत्तयेव क्षितितले लुठन्त्याः उद्गिरद्धवळफेनया लुठच्छैवालकचया तरंगवहाश्रुमुहुर्धरण्यां निपातयन्त्या तारतारं कूजन्त्या मूर्च्छितयेव सततमनुभवन्त्येव मदनावस्था-मपि योगिमनोवृत्येव निर्मलया सुरापगया परिवृतं, सिद्धचारणप्रभृतिभिः देव-गणैरुपशोभितं तत्रतत्र भयंकरेषु गह्वरेषु सुप्तोत्थितैः कोरकितलोचनैः करतल-मुदरदेशं च शश्वदालिह्य अरुणजिह्वापल्लवाग्रेण कृतांगभंगतया दीर्घतरविग्रहैः जृंभावसरे अतितीक्ष्णा दीर्घतराःभयंकराश्चदंष्ट्राः प्रदर्शयद्भिः निर्गत्य च मन्दग-

मनेन विवर्त्यासकृत्कन्धरामाकेकरया दृष्टचादर्शदर्शं पर्यटद्भिः निर्घोपवाचालितदिगंतराळैः कंठीरवैरतिभयानकं, भिषजमिव दिव्योषधिसनाथं हरमिव गंगाधरं अर्जुनसुतमिव परिगृहीतोत्तरं चंचुपुटलंबमानमानससंजातकनककमलनिकरैः उद्धूयमानधवळपक्षपुटतरंगपरंपरैः डयमानैः गगनतलेपि कमलपंडमंडितस्य स्वच्छांभःपरिपूरितस्य सरसस्सन्देहमुपजनयद्भिः राजहंसमंडलैः मंडितं पूर्वापरपारावारयोः कुशलानुयोगमेकदैव कुर्वन्तं महान्तं हिमवन्तं पश्यन् कैलासमुपेत्य तत्र समास्तीर्णशार्दूलचर्मालंकृते इन्द्रायुधपरिगते शरत्कालांबरतलइव रजतगिरिशिखरे निषण्णं, ऊर्ध्वमुखाबद्धस्य पाटलजटाकलापस्य मध्यदेशे निवसंत्या शशांककलया अलंकृतशीर्षं, सन्ध्यातपशोणितं चन्द्रकलासनाथमंबरदेशमिव तुहिनकरकलावलया शिरःप्रासादारुरुक्षया कल्पितस्फटिकशिलासोपानैरिव भसितत्रिपुंड्रकैरलंकृतललाटं, देदीप्यमाननेत्रालंकृतालिकमध्यदेशं विराजमानदिवाकरांबरमध्यं शारदं दिवसमिव प्रभुर्मम सप्रतीकः करणीय इति संप्रार्थ्य त्रितीयनेत्राय द्वैधीभूय नमस्कुर्वन्त्या स्मरचापलतयेव भ्रूलतया विराजमानं, उन्नततासिकं, आकर्णविश्रान्तनयनं विशालश्रवणजाहलंबमानाहिरत्नकलापप्रतिबिंबाभ्यां चुंबनावसरे गिरिजायाः संक्रान्ताधरपल्लवद्युतिभ्यामिव धवळकपोलाभ्यामुपशोभितं, ईषद्विरचितमन्दहासतया प्रतिबिंबितधवळदन्तपंक्ति प्रालेयबिन्दुदन्तुरं पल्लवमिवाधरपल्लवमुद्वहंतं मरकतमणिभरितधवळकाचपात्रेणेव विषभरितत्वादतिमेचकेन कंठेनोपशोभमानं भुजान्तरमन्तरेण धृतगजचर्मतया प्रतिबिंबिततदसितकान्तिप्रचुरार्धभागया पांडुरकरोटिमालया उपरि निपत्य क्रीडावसरे निजसुतस्य एकदन्तस्य दन्तसंघर्षणजातव्रणकिणस्थपुटितं अतिविशालं धवळतरं वक्षस्थलं प्रतितरंगप्रतिबिंबितार्धग्रस्तशशांकमालं अच्छसलिलपूरितं सर इवोद्वहन्तं, भुजंगमावेष्टिततया चन्दनलताशाखां विडं-

वयद्भिः धृतशंखचक्रवलयतया नारायणपाणिपुंडरीकस्यानुकुर्वद्भिः दंडधर-स्यापि दंडायमानैः गैरीकंठस्य च विशदकुसुममालायमानैः दीर्घतरैः पृथुल वर्तुलैश्च चतुर्भिः बाहुभिर्विराजमानं, कृष्णाजिनपरिधानं, पुरोविराजमाने चक्राकारे स्फटिकशिलाफलके प्रसृमरकिरणारुणांचलप्रदेशे पांडुरुचिप्रयाचनाय चरणपरिचर्यामाचरति चंडेतरकिरणबिंबइव विनिहितचरणयुगळं विडंबयितु-मिव वल्लभं मेचककचकलापकैतवेन यमुनासलिलमपि शिरसा समुद्वहन्त्या कालिन्दीतरंगमध्यविलुठता मृणाळेनेव सीमन्तेन विलसन्त्या वदनमवलोक्य पुंडरीकशंकया समागतैरिव भ्रमरैरुपशोभितया मृगमदतिलकपरिमंडितं विशालं ललाटमुद्वहन्त्या मेचकलोचनपरिवेपाभ्यामिव श्यामभ्रूलताभ्यां अतिमनोहरया तरळतररुचिरमेचकलोचनया सितचंपककोरकसंकाशनासिकया सुरतावसरे चास्यसरोरुहावलोकनाय शंकरकृते विरचितहीरमुकुराभ्यामिव कोमलकपोलाभ्यामुपशोभमानया प्रियस्य कळंकहति विहाय दोषाकरं अक-ळंकमवलंब्य वदनचन्द्रमसमुभयतः सेवामाचरद्भिः तारानिकरैरिव मणिगण-खचिताभरणनिवहैरलंकृताभ्यां निजपतिसमुपदिष्टराममन्त्रपवित्राभ्यां श्रोत्राभ्यां विराजमानया कृतमन्दहासतया प्रतिबिंबितरदनराजिं अत्यधिकतया अमृत-बिंदुसन्दोहमिव वमन्तमधरपल्लवमुद्वहन्त्या पटीररसचर्चितकंबुकन्धरया अनेक-वलिविलुलितसितदुकूलावगुंठितेन तरळतराविरळमुक्ताहारेण स्तनयुगळेन उपरि प्रसृमरतरंगपरंपराकुलसुरापगास्रोतसा स्वच्छतरबुद्बुदमालेन हिमगिरिपरिसर-विराजमानेन गंडशैलयुगळेनेव भासुरया शारीररुचिनीरतरंगाभ्यामिव दीर्घा-भ्यां भुजाभ्यामुपशोभमानया परिधृतधवळदुकूलतया रुचिराभरणतया च कौमुदीविशदेन रुचिरतारकाविच्छुरितेन शारदेन सुरसरणिचत्वरेणेव शरीरेण विरजमानया प्रणयकलहावसरे प्रणिपततो गंगाधरस्य शिरसि विलसन्त्या

सुरसरिता क्षालितत्वादिव धवळतरेण नूपुरराजिविराजमानेन चरणयुगळेन विलसन्त्या गिरिजया परिमंडितवामपार्श्वं, पृथुलकुंभस्थलेन मुहुश्चालितकर्णतालनिरस्तकरटतटपर्यटद्‌ळिपटलपाटनकुन्तनिभैकदन्तेन मोदकभ्रान्त्या शशांककलादित्सया शश्वन्नीलकंठमस्तकोपकंठप्रसारितशुंडादंडेन गंडमंडस्यन्दमानदानधाराद्विगुणितपरिमळमलयजरसावलीढवक्षःस्थलेन प्रसृमरामोदमोदकखादनामोदितहृदयेन अष्टमीशशांकसंकाशमोदकपरिमंडितदक्षिणपाणिपुंडरीकेन पिचंडिलेन सकलशास्त्रपारदृश्वना गणाधिपेनपरिष्कृतदक्षिणार्श्वं अत्युन्नताभ्यां पृथुलतरमूलाभ्यां कलधौतकलशकलितशिखराभ्यां विषाणाभ्यां परिष्कृतोत्तमांगेन तुषारगिरिविशालशिलाफलकानुकरि अतिधवळं अन्तरान्तराघटिताष्टमीशशांकलेखाकाराभरणपंक्तिभिः कनकशृंखलिकाराजिभिः मनोहरं ललाटमुद्वहता उन्नमितभ्रूतरंगपरंपराभिः विराजमानेन असिततारकाभ्यां मेचकपक्ष्मांचलाभ्यां दरकोरकिताभ्यां लोचनाभ्यां उपशोभमानेन असितनासिकातलेन रोमन्थासक्ततया लंबमानपांडरफेनपिंडपरिमंडितास्यतलेन कलधौतघंटासहस्रवचालितश्यामरज्जुनियोजितपृथुलकिंकिणीमालालंकृतमांसलविशदतरकंठेन लंबमानां वलिविलुलितां सुरापगास्रोतस्तरंगमिव विडंबयंतीं सास्नामुद्वहता रजतगिरिशिखरसदृशककुदा धवलपट्टवसनपिहितशरीरेण अतिशक्तितया अतिमांसलतया च स्थपुटितोरुद्वयेन सरीसृपभोगानुकारिनीलतररोमपुंजमंजुलाग्रायतवालेन निषण्णेन वृषभवरेण विराजमानपुरोभागं, रजताचलान्तःप्रतिबिंबिततया द्विगुणितैः पुरहरापदानस्तोत्रजालवाचालितकण्ठैः कोरकितकरसरोरुहैः प्रमथगणैः परिवृतं, त्रिनेत्रमपि दिगंबरं भूत्यनुलिप्तमपि भिक्षाटं, पितृवननिवासिनमपि शंकरं, सर्वज्ञमपिपशुपतिं, नीलकंठमपि लालितलेलिहानकुलं चन्द्रशेखरमपश्यत् ॥

तत्क्षणमेव ज्ञात्वा चन्द्रशेखरः किरीटकोटिघटितपद्मरागारंजितदिगंतरालैः विविधभूषणभूषितैः दिव्यरूपैः अतिक्रान्तनयनसरणिभिः वृन्दारकवृन्दैः पुरस्कृतं अवतंसितमन्दारप्रसवमालं कुलिशग्रहणजनितकिणकठिणपाणितलं सहस्रेक्षणं समीक्ष्य समन्दस्मितं मधुरवचसा कृत्वा कुशलानुयोगं आगमन कारणमपृच्छत ॥

पृष्टश्च पुरुहूता चारुवत्रवृत्तमुत्तरयामास, तदनु गिरीशो नवांबुदसन्दोहश्यामं पुष्करायताक्षं रथांगशंखगदादिदिव्यहेतिजालं कमलालंकृतवक्षःस्थलं भक्तवत्सलं नारायणं अनुस्मरंतं तं चारुवक्त्रं तपसः कथमिव विघटयितुमीशे अहं ईशोप्यनिश एव अतः पितामहमुपेत्य तेन सह क्षीरपारावारतीरमाश्रयामः इत्यभिधाय च झडित्यवरुह्य रजतगिरिशिखरादपरमिव रजतगिरिं वृषभवरं समधिरुह्य सुरपतिसहचरः शंकरः प्रतस्थे । प्रस्थाय च अतिक्रान्त भुवस्सुवर्महर्जनस्तपोलोकः तत्र तत्र लब्धसपर्यः होमधूमलताकुलितशिखरतया अनवरतमपि जटामिवोद्वहद्भिः पृथुलमुक्ताफलमालातोरणकलिततया धृतस्फटिकाक्षवलयैरिव श्रुतिप्रतिरवच्छलेन आम्नायमिव अभ्यसद्भिः सुधाधवलितभित्तितया धृतधौतवसनैरिव तपोधननिकरमिव विडंबयद्भिः अत्युन्नतैः विशदतरैः भवननिकरैरभिरामं अखिलशास्त्रपारदृश्वभिस्सशरीरं पर्यटद्भिरिव पुण्यनिकरैः स्त्रीशब्दपराङ्मुखैरपि त्रैय्यनुरागिभिः ध्यानाहारैः द्विजवरवजैः परिवृतं अमन्दफलसन्दोहभारलंबमानविटपकोटिसंकटविटपिपटलैः उत्फुल्लकमलकल्हारपुंडरीकादिकुसुमषंडपरिमंडितसरस्तीरविराजमानराजहंसराजिरावरमणीयैः विविधपतत्रिकुलैः दिव्यप्रसूनप्रचुरैः अत्युन्नतहरितदूर्वान्तरितवाताग्रुततिभिः उपवनैरतिरमणीयं सरित्पतिमिवान्तर्निहितवाडवं शुक्लपक्षप्रदोषमिव सुधादीधि-

तिधवळिनं त्रिसयमुपजनयन्तं सत्यलोकमवलोक्य सुधाह्रदाभिषिक्त इव प्रसन्न-मानसः क्रमेण कनककवाटघटितवातायनसहस्रसंकुलं प्रासादसहस्रोपशोभितं निखिलनिगमपारदृश्वभिः शुकशारिकाप्रभृतिभिः शकुनिनिकरैः अब्जयोनि-विमानीभूतमराळराजलीलासरश्शतैः विचित्रतरपरिमळकुसुमभरितमहीरुहनिव हैश्वाभिरामारामं मेरुमिव कनकशिखरसहस्रं उपरक्तमार्ताडमंडलमिव केतुपरि-वृतं नारायणमिव कमलासनालंकृतनाभिं कमलासनविमलालयमविशत् ॥

प्रविश्य च तत्रतत्र निषण्णैः विशदतरवसनपरिष्कृतैः धवळतरपृथुलमु-क्ताफलमालालंकृतैः द्वारपालैः दत्ताभ्यनुज्ञः अतिगतसप्तकक्ष्यांतरश्च अधिगत्य सभाद्वारं कमलासनाय निवेदयितुं अन्तः प्रेषयामास द्वारपालम् ॥

तदनु सोप्यनुपालयन् दर्शनावसरं मन्दमुपगम्य प्रणम्य च करकमल-तलपिहितास्यनासातलः सविनयमवनमितोत्तमांगः सपरिवारमागतं ससहस्राक्षं विरूपाक्षं द्वारस्थितं निवेद्य पितामहाय तेन च दत्ताभ्यनुज्ञः द्वारि स्थितं चतु-र्मुखदर्शनलालसं पीनाकिनं पाकशासनसनाथं अन्तःप्रावेशयत् ॥

प्रविशति च शंकरे ससंभ्रममुत्थाय कणादप्रभृतयो मुनिजनाः कृतां-जलिपुटाः मणिखचितं मृदुळतरपट्टोपधानपरिमंडितं प्रजापतिपार्श्वगतं पीठं प्रदर्शयामासुः ॥

तदनु प्रणिपत्य कमलासनाय समुपविश्य च तत्र शंकरः कृतांजलि-पुटं सविनयमवनमितोत्तमांगं सुरपतिमप्युपवेशयित्वा पार्श्वएव निखिलमुनि-गणवन्दितचरणं चतुःकिरीटतरणिं विशालोन्नतरमणीयशंखं भ्रूतरंगकल्लोलाकुलं ऊर्णावर्तसंकुलं चंचललोचनं मकरराजिविराजमानं उन्नमितनासिकाद्वीपं रदन-पंक्तिमुक्ताफलदन्तुरं अधरोष्ठविद्रुमलतासनाथं चतुराननमंडलमिंदुमिवोद्वहन्तं

श्रुतिचतुष्टयसदृशैः कंठैरुपशोभमानं निगमशाखानुकारिभिः चतुर्भिः भुजै-र्विराजमानं, स्फटिकाक्षमालिकाकपटेन अन्तःपूर्णवेदवर्णश्रेणिमिव बहिः प्रकटयदायतं वक्षःस्थलमुद्वहन्तं, चतुराननकमलतया चतुःकरसरोरुहतया च कमलवनमिवप्रदर्शयन्तं वितानितदुकूलपल्लवस्य परिलंबितपृथुलमुक्ताफलकलापस्य समुत्कीर्णकनकमयजारणकरलंबितडोलायमानपरिमळसमाकृष्टदिव्यमधुकरनिकरमधुररवमुखरितकुसुममालालंकृतस्य नात्युन्नतविचित्रमणिमयस्तंभस्य मंटपस्य मध्ये विलसति प्रत्नरत्नप्रभापिशंगिते विमलतरदुकूलालंकृते कलधौतमये पीठे निषण्णं, उभयपार्श्वोद्धूयमानकाशकुसुमकेसरसंकाशचामरं पक्षत्यंतरितत्रोटिना दीर्घैकारुणचरणस्थितेन विमानीभूतेन स्वपता राजहंसेन रजतप्रतिग्राहेणेव विराजमानपुरोभागं पितामहमवलोक्य व्याहारावसरमनुपालयन् सविनयमब्रवीत् ॥

विदितमेव खलु भगवतो देवस्य सकलमपि तथापि किंकराणां ईदृशानां अनुगुणमेव हि निवेदनं तथा च कांक्षा मनः प्रबोधयति निवेदनं यथा च कांक्षा मनः प्रबोधयति निवेदयितुं ॥ भुवि चारुवक्त्रतपसा दग्धकल्पमखिलमपि जगत् अतः श्रुतिसुखं सुभगनुतिशतैः समभ्यर्च्य भगवन्तं गरुडकेतनं विघटयामः तपसस्तं चारुवक्त्रमिति ॥

तत्क्षणमेव धात्रा प्रबोधितः मराळपतिः मुक्ताफलवलयालंकृतां कंधरामुदस्य सरस्वतीमंजीरमंजुशिंजितरमणीयरवः समुद्धूयमानपांडरपक्षमंडलः सिद्धोसि गंतुमिति निगदन्निवाराजत॥ तदनु तमधिरुह्य सुरबलपरिगतः सहस्राक्षविरूपाक्षपरिष्कृतोभयपार्श्वः प्रजापतिः त्वरया निरगात् ॥

गत्वा च पुनरपीमां मथितुमागतस्सुरनिकर इति भयादिव सुदूरमपसरन्तं शश्वल्लोलकल्लोलजालैः चोदिततया सनिर्घोषं सामर्षं युयुत्सया

तटगतं सुरनिकरमभियान्तमिव परस्परं तरंगसंघर्षणपरिस्फुरच्छ्रीश्वशुरेति तातेति चाहूयमानं सगरमिव प्रसूतानंतसंतानं कपर्दिनमिव धृतकपर्दं धीवरमिवान्तःचञ्चलमत्स्यजालं वर्षर्तुमिवघनतरंगवृष्टिशीकरदुर्दिनीकृतं मूर्छितमिवोद्गिरद्धवळफेनं राजसदनमिवान्तर्निहितमहीभृत्कुलं विलासिनीहृदयमिव चन्द्रोदयदर्शनानन्दतुंदिलं वसुदेवमिव विधुजनकं शिशुमतीस्तनमिव क्षीरपूरितं बालकमिव सततचंचलं तरुणमिव गभीरतरं स्थविरमिव वलितरंगाकुलं नारायणमिव धृतावर्तचक्रं सततविद्रुममपि प्रसूतकल्पद्रुमं प्रह्लादजनकमपि माधवोपलालितं कृष्णाक्रान्तमपि सुधाधवळं महारत्नसंचयमपि दरिद्रमिव बहिःप्रकटितवराटिकाशुक्तिशंखमालं नितान्तजलजन्तुसन्तताकुलितान्तःप्रदेशं अपारं क्षीरपारावारमद्राक्षीत् ॥

दृष्ट्वा च दिगन्तरप्रसृमरकिरीटकोटिघटितपद्मरागारुणकिरणद्विगुणितशोणिमभिः पाणिपल्लवैः मूर्तिमद्भिरुन्मस्तकानुरागैरिव कृतांजलिपुटाः भक्तिसमाश्लिष्टान्तरंगाः निश्चलगात्रयष्टयः सर्वेपितामहप्रमुखाः सुरनिकराः इत्थमस्ताविषुः ॥

(द) देव जय जय भगवन् संसाररोगापहारातिधीर त्रयीदिव्यसंजीवनोद्धारणायातिकल्लोलमालाकुलीभूतरत्नाकरान्तः परिभ्रान्तलक्ष्मीविशालाक्षिसंकाशकाय प्रकाश प्रकाशीकृताशामुखाश्चर्यवेश्मीकृतांडप्रजातप्रकांडावतार कर्मत्वमाश्रित्यचात्यायतोत्तानपृष्ठप्रदेशोढमन्थानशैल अतिसंभ्रान्तिसंजातपीयूषभागेप्रतार्येन्द्रशत्रूंश्चगांभीर्य सौन्दर्यसंपूर्णपूर्णेन्दुवक्त्रावतारेण च आवर्तमध्यादुपारूढलक्ष्म्या तटिन्मिश्रवर्षर्तुजीमूतसंकाशबाहान्तराळ महासिन्धुमग्नस्थिरामंडलोद्धारकालप्रलोलस्फुरद्दीर्घघोणातिनिर्घोषसंघूर्णिताशेषलोक शाताग्रहस्तोद्धतोद्भिन्नदैत्येन्द्रवक्षःस्थलोद्गीर्णरक्तच्छटास्वादमोदोद्धमन्नादभीताष्टदिग्दंतिसंचा-

ल्लितोद्दंडकुंभाग्रसंत्रस्तविश्वंभरामंडल खर्वावतारेण लेखेशनिघ्नप्रनष्टत्रिलोकी-मधीनां विधातुं महाधर्मचित्ताद्बलीशात् गृहीत्वा 'त्रिपादैकमेवस्थलीं पादपद्म-त्रयाक्रान्तलोक कठारेण शश्वद्विदार्य क्षमानेतृवर्गोत्तमांगान्सतीव क्रुधानेकधा-निस्सरद्रक्तधाराप्रवान्तारुणिम्नातिभीमेन संवर्तसंजातसन्ध्यायमानं मुदा काल-मालोक्य भीमाट्टहासेन नृत्यप्रवृत्तेन कृत्यंशुकेनाशुसंश्लाघ्यमानातिभीमाकृते राम दशाशाप्रशांतीकृताशेषकाशत्पलाशेशपीडातपोद्दंडकोदंडदेवेश कांडासना-श्लिष्टसीतातटिद्वल्लिकान्तातिनीलात्रिरामोल्लसद्रामजीमूत निजास्येन्दुसंदर्शना-धीनगोपांगनाश्लेषपीन स्तनाभोगदीप्रार्द्रमीनांकितोरस्थल प्रदेहि प्रदेह्यद्य संद-र्शनं ते नमस्तुभ्यमिति स्तुत्वा च बहुधा भक्तिसमासक्तस्वांतः सुरगणः क्षणमिव इन्दिरेशसुन्दरदिव्यमूर्तिमनुध्यायन् निभृतगात्रयष्टिरभवत् ॥

तत्क्षणमेव सहस्रकिरणसहस्रसंकाशं शून्यीकृतनिखिलदिक्चक्रं विबुध-निकरं परस्परस्पर्शानुमेयं उदतिष्ठत् क्षीरोदोदात्किमपि तेजः ॥

उत्थाय च अवगतं भवदागमननिदानं गच्छन्तु भवन्तः निवारया-म्यद्यैव वरप्रदानेन तस्य नरपतिसुतस्य तपोवेगमित्युक्त्वा अन्तर्हितमभवत् ॥ श्रुत्वाच कर्णाभ्यर्णावकीर्णसुधाशीकरं मधुरतरंगभीरं भगवतो भाषितं अमन्दा-नन्दतुंदिलाःसर्वेपि सुरनिकराः निजवासभूमिमयासिषुः ॥

अथ पुंडरीकाक्षः पक्षिपतिमधिरुह्य त्वरयोन्नमितबाहुयुगळं कृतांजलि-पुटं तपोनलज्वालाभिरिव पाटलजटाभिः अतिगहनशीर्षनिमीलितनयनयुगळं अनवरतमपि परिस्फुरदधरोष्ठं अतिकृशतनुं वल्कलपरिधानं दक्षिणोरुतलविनि-हितवामचरणकमलतलं क्षितितलनिक्षिप्तदक्षिणप्रपदं वैश्वानरमिव समुज्ज्वलंतं भुजगपतिमिव वाताशनं दिवाकरमिव द्विजव्रजसेवितं पशुपतिमिवाहिततिस-मावेष्टितविग्रहं हिमशैलप्रान्तमिव हंसधवळमानसं तंचारुवक्त्रमद्राक्षीत् ॥

दृष्ट्वा चानुकंपया तात चारुवक्त्र प्रसन्नं पश्य मामेनं तन्निवेदय यदभिमतं दित्सुरसीत्यब्रवीत् श्रुत्वा च घनरवगंभीरां मनोहरां गिरं हर्षोत्फुल्लनयनपुंडरीकः सोपि नरपतिसुतः मकुटमकरकुंडलग्रैवेयकहारकेयूरकटकनूपुरादिदिव्यमंडनपरिमंडितं सवर्णतया प्रीत्या शिरस्याघ्राय अंसास्फालनमाचरंतीभिः कादंबिनीभिरिव भुजशिरसि लंबमानाभिः कुटिलतरकचमालाभिः अलंकृतोत्तमांगं अलिकतलसौन्दर्यदिदृक्षया वक्षःस्थलस्थितायाः लज्जया स्तोकमिव उन्नमितवदनकमलायाः कमलायाः कटाक्षकान्तिलेखयेव दिव्यमृगमदतिलकलेखया अलंकृतं, अष्ठमीशशांकसंकाशं ललाटफलकमुद्वहन्तं, प्रह्वभावेन सूर्याचन्द्रमसोरपि धुरि स्थितिमभिलषन्तीभ्यां तनुभ्यां तिमिरपंक्तिभ्यामिव नीलाभ्यां भ्रूलताभ्यां उपशोभमानं तिरस्कुर्वद्भ्यां पुंडरीकमीननिकरान् सौन्दर्यमिव वमद्भ्यां करुणारसमिव संकिरद्भ्यां क्षीरपारावारे नीलमेघश्यामोऽयमेव पांडरतरकुंडलिपतिमंडलमधिशेत इति धवळतरतारकामध्यविलसत्कृष्ण कनीनिकाकैतवेन शेषशायिनं नारायणमिव प्रदर्शयद्भ्यां द्विवाकरनिशाकररूपाभ्यां आकर्णविश्रांतभ्यां भक्तजनहृदयहरिणनिकराणां वागुरायमानाभ्यां नयनाभ्यां विराजमानं, उन्नमितदिव्यनासिकं, मकरकुंडलभारासहतया अधःपतनभयादिव अवलंबितस्कन्धाभ्यां भक्तजनगानश्रवणकुतुकाभ्यां श्रवणपुटाभ्यां विलसंतं, प्रतिबिंबितकर्णावतंसाभ्यां मरकतफलकानुकारिभ्यां कोमलतराभ्यां कपोलफलकाभ्यामुपशोभमानं, कृतमन्दहासतया पुरानुभूतं दुग्धापहरणनिरतं कृष्णबाल्यमिव प्रदर्शयंतं, प्रतिबिंबितरदनराजिकैतवेन अधरपल्लवमुद्वहन्तं, वनमालाश्लिष्टकंबुकंठं, प्रसारितकरेण प्रकटितरागेण भगिन्याःकमलायाः कुशलानुयोगमिव श्रोतुमागतेन चन्द्रमंडलेन कौस्तुभेन कौस्तुभरश्मिनियंत्रितयेव निश्चलया सुवर्णवर्णया दारिद्र्यदुस्तरवनगहनस्य दवज्वलनज्वालया लक्ष्म्या च समालिंगितवक्षःस्थलं, अधिकतरापीतपौंड्रकवासुदेवशिशुपालादिदुष्टजनकंठबाण

बाहुसहस्ररुधिरतलयासमुज्वज्ज्वालामिषेण ततसर्वमिवचमतानारायणोपरि अपाय समुदायानिष्पतनायेव जागरेणानवरतमपिपरिभ्रमता: अनुबद्धनारायणाशयेन भानुसहस्रभासुरेण अतिकृच्छ्रदर्शनेन सुदर्शनेन नारायणाध्मातवातबलपार-दृश्वना कररुहकिरणद्विगुणितधवळिम्ना अकीटजन्येनपांचजन्येन अपहृतसुर-भीतिगदया गदया अत्यमलेन कमलेन च परिमंडितचतु:पाणिपुंडरीकंपीतांबर-परिधानं दिव्यनवरत्नखचितकनकमेखलं वेदात्मना सुवर्णवर्णेन सपक्षेणैव कनक-गिरिणा मय्येवास्यमहिमा प्रतिपाद्यत इति प्रदर्शयतेव करकमलाभ्यां हरिचर-णसरसिजयुगळमुद्वहता गरुत्मता समूह्यमानंवर्षर्तुसुरपथमिव नीलमेघश्यामं क्षपा-करमिव कमलालिंगितं वनजाक्षमप्यवनजाक्षं काकोदरशायिनमपिसततपरि-शुद्धं अजमपि योगिजनहृदयान्दकरं सर्वाभीष्टफलदं श्रीमन्तं भगवन्तं नारा-यणमपश्यत् ॥

दृष्ट्वा चानन्दसिन्धुपरिप्लावितहृदये नमस्कुर्वति तस्मिंश्चारुवक्त्रे करुणार्द्रहृदयो नारायणः सरभसमुत्थाप्य तंवत्स यदभिमतं ते दित्सुरस्मी-त्यब्रवीत् ॥

श्रुत्वा च कृतांजलिपुटः देव सर्वज्ञोपि किमप्यजानन्निवमामेवं कुतः पुनः पृच्छसि भवतु न कदाप्युल्लंघनीया खलु भवदाज्ञा देहि देव विजगीषवे मह्यमप्रतिहतं प्रहरणमिति सविनयं प्रार्थयामास ॥

तदनु समन्द स्मितं मुकुन्दो घंटासहस्ररसितवाचालितदिगंतरं अत्युद्दंडं कोदण्डम् ॥

---

वे. बि. सुब्बय्य अंड् सन्स्, प्रिंटिंग् वर्क्स् बेंगळूर सिटि.